समानामात्मारामाणाम् अपि समस्य सहृचरस्य श्रीभगवतोऽपि वा आ सर्वतोभावेन सर्वांशेनैव प्रियमिति। तत्रातदंशत्वं निषिध्य सर्वतोऽप्यानन्दातिशयप्रदत्वं प्रदर्शितम् ॥१०॥१३॥ श्रीशुकः ॥ १७३ ॥

तदेवं श्रीकृष्णलीलास्पदत्वेन तान्येव स्थानानि दर्शितानि। तत्रावधारणं श्रीकृष्णस्य विभुत्वे सति व्यभिचारि स्यात्तत्र समाधीयते तेषां स्थानानां नित्यतल्लीलास्पदत्वेन श्रूयमाणत्वात् तदाधारशक्ति-लक्षणस्वरूपविभूतित्वमवगम्यते। स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः। साक्षाद्ब्रह्म गोपालपुरीत्यादेश्च। ततस्तत्रैवा-व्यवधानेन तस्य लीला। अन्येषां प्राकृतत्वात् न साक्षात्तत्स्पर्शोऽपि सम्भवति धारणशक्तिस्तु नतराम्। यत्र क्वचिद्वाप्रकटलीलायां तद्गम-नादिकं श्रूयते, तदपि तेषामाधारशक्तिरूपाणां स्थानानामावेशादेव मन्तव्यम्। वैकुण्ठान्तरस्य त्वप्राकृतत्वेऽपि श्रीकृष्णविलासास्पदता-करनिजयोग्यताविशेषाभावान्न तादृशत्वमिति ज्ञेयम्। अथाप्रकट-प्रकटलीलयोः समन्वयस्त्वेवं विवेचनीयः। तत्र यद्यपि तस्याप्रकट-लीलायां बाल्यादिकमपि वर्त्तते, तथापि किशोराकारस्यैव मुख्यत्वात् तमाश्रित्यैव सर्वं प्रवर्त्तते इति प्रकटलीलापि तमाश्रित्यैव वक्तव्या। यथा द्वारकायामपि मथुरायामपि वृन्दावनेऽपि युगपदेक एव किशो-राकृतिः श्रीकृष्णाख्यो भगवान् श्रीमदानकदुन्दुभिव्रजराजनन्दनरूपेण प्रापञ्चिकलोकाप्रकटं नित्यमेव लीलायमान आस्ते। अथ कदाचित् भक्तियोगविधानार्थं कथं पश्येम हि स्त्रिय इत्याद्युक्तदिशा सत्यप्यानु-षङ्गिके भूभारहरणादिके कार्य्ये स्वेषामानन्दचमत्कारपोषायैव लोके-ऽस्मिंस्तद्रोतिसहयोगचमत्कृतनिजजन्मबाल्यपौगण्डकैशोरात्मिकलौ-किकलीलाः प्रकटयन् तदथ प्रथमत एवावतारितश्रीमदानकदुन्दुभिगृहे तद्विधयदुवृन्दसंवलिते स्वयमेव बालरूपेण प्रकटीभवति। अथ च तत्र तत्र स्थाने वचनजातनिर्द्दिष्टनिजनित्यावस्थितकैशोरादिविलास-सम्पादनाय तैरेव प्रकाशान्तरेणाप्रकटमपि स्थितैः परिकरैः साकं

निजप्रकाशान्तरेणाप्रकटमपि विहरत्येव। अथ श्रीमदानकदुन्दुभि-गृहेऽवतीर्थ्य च तद्वदेव प्रकाशान्तरेणाप्रकटमपि स्थित्वैव स्वयं प्रकटीभूतस्य सव्रजश्रीव्रजराजस्य गृहेऽपि तदीयामनादित एव सिद्धां स्ववात्सल्यमाधुरीं जातोऽयं नन्दयति वालोऽयं रिङ्गति पौगण्डोऽयं विक्रीड़तीत्यादिस्वविलासविशेषैः पुनः पुनर्नवीकर्त्तुं समायाति। तत्र च सकलमाधुरीशिरोमणिमञ्जरीमाकैशोरवाल्यकेलिलच्मीमुल्लास्य गोकुलजनान्नितरामात्मवशीकृतान्तर्वहिरिन्द्रियानापाद्य पुनरपि तेषां समधिकामपि प्रेमर्द्धिं सम्वर्द्धयन् श्रीमदानकदुन्दुभिप्रभृतीनपि नन्दयन् भूभारराजन्यसंघमपि संहरन् मथुरायां प्रयाति। ततश्च द्वारकाख्यं स्वधामविशेषं प्रकाशयितुं समुद्रं गत्वा तत्तल्लीलामाधुरीं परिवेशयति। अथ सिद्धासु निजापेक्षितासु तत्तल्लीलासु च तत्र तत्र नित्यसिद्धमप्रकटत्वमेवोरीकृत्य तावप्रकटलीलाप्रकाशौ प्रकटलीलाप्रकाशाभ्यामेकीकृत्य तथाविधतत्तन्निजवृन्दसप्रत्यूहमेवानन्दयतीति। अत्र पूर्णकैशोरव्यापिन्येव व्रजे प्रकटलीला ज्ञेया। क्वचातिसुकुमाराङ्गौ किशोरौ नातियौवनौ इति। नात्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि। वाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचिदिति। मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः। जहार मत्तद्विरदेन्द्रविक्रमो दृशां दधच्छ्रीरमणात्मनोत्सर्वमित्यपि हि श्रूयते। अतएव एकादशसमास्तत्र गूढ़ार्च्चिः सबलोऽवसदित्यत्रैकादशसमा व्याप्य गूढ़ार्च्चिरित्येष एवार्थः। अथवा एकादशभिः एव समाभिस्तस्य पूर्णकैशोरत्वं ज्ञेयम्। कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले। अघृष्टजानुभिः पद्भिर्विचक्रमतुरोजसेत्यादेः। तदेवं स्थिते लीलाद्वयसमन्वये त्वप्रकटलीलैकीभावसमयश्चैवमनुसन्धेयः। प्रथमं श्रीवृन्दावने ततो द्वारकामथुरयोरिति सर्वप्रकटलीलापर्य्यवसाने युगपदेव हि द्वारकामथुरयोः। लीलाद्वयैक्यं मथुराप्रकटलीलाया एव द्वारकायामनुगमनात्। अतएव रुक्मिणीप्रभृतीनां मथुरायामप्यप्रकटप्रकाशः श्रूयते।

वृन्दावने त्वियं प्रक्रिया विभिद्य लिख्यते। तत्र प्रथमं श्रीवृन्दावनवासीनां तस्य प्राणकोटिनिर्म्मञ्छनीयदर्शनलेशस्य विरहस्ततः श्रीमदुद्धवद्वारा सान्त्वनं पुनश्च पूर्व्ववदेव तेषां महाव्याकुलतायामुदितर्य्यां श्रीबलदेवद्वारापि तथैव समाधानम्। अथ पुनरपि परमोत्कण्ठाकोटिविस्फुटहृदयानां सूर्य्योपरागव्रज्याव्याजया तदवलोकनकाम्यया कुरुक्षेत्रगतानां तेषां घर्म्मान्ते चातकानामिव निजाङ्गनवघनसंघावलोकदानेन साट्टश्चसंलापसन्द्रगर्ज्जितेन च पुनर्जीवनसञ्चारणम्। अथ दिनकतिपयसहवासादिना च तानतिक्षीणतरानन्देन दुर्भिक्षदुःखितानिव संतर्प्य तैः सह निजविहारविशेषाणामेकमेव रम्यमास्पदं श्रीवृन्दावनं प्रत्येव पूर्व्ववत् सम्भावितया निजागमनाश्वासवचनरचनया प्रस्थापनम्। सूर्य्योपरागयात्रा त्वियं दूरतः प्रस्तुतापि कंसबधान्नातिबहुसम्वत्सरान्तरा शिशुपालशाल्वदन्तवक्त्रवधात् प्रागेव ज्ञेया। श्रीबलदेवतीर्थयात्रा हि दुर्य्योधनबधैककालीना। तस्मिन् तस्यां कुरुक्षेत्रमागते खलु दुर्य्योधनबधः। सा च सूर्य्योपरागयात्रायाः पूर्वं प्रठिता। सूर्य्योपरागयात्रा च श्रीभीष्मद्रोणदुर्य्योधनाद्यागमनमयीति। तत्रायं क्रमः। प्रथमं सूर्य्योपरागयात्रा, ततः श्रीयुधिष्ठिरसभा, तस्यां शिशुपालबधः, ततः कुरुपाण्डवद्यूतं, तदैव शाल्वबधो वनपर्व्वणि प्रसिद्धः, दन्तवक्त्रबधश्च ततः, ततः पाण्डवानां वनगमनं, ततः श्रीबलदेवस्य तीर्थयात्रा, ततो दुर्य्योधनबध इति। तस्मादुपरागयात्रा कंसबधान्नातिकालविलम्बेनाभवदिति लभ्यते। यत्तु तस्यामेव, आस्तेऽनिरुद्धो रक्षायां कृतवर्म्मापि यूथप इति, तदपि श्रीप्रद्युम्नानिरुद्धयोरल्पकालादेव यौवनप्राप्त्या सम्भवति। यथोक्तम्—नातिदीर्घेण कालेन स कार्ष्णी रूढ़यौवन इति। अथवानिरुद्धनामा कश्चित् कृष्णनन्दन एव यो दशमान्तेऽष्टादशमहारथमध्ये गणितः। तथैव च व्याख्यातं, तत्र तैरिति। अतः कुरुक्षेत्रयात्रायामेव श्रीमदानकदुन्दुभिना श्रीकुन्तीदेवीं प्रत्युक्तम्—कंसप्रतापिताः सर्वे वयं याता दिशो दश। एतर्ह्येव पुनः स्थानं दैवेना-

सादिताः स्वसरिति। अतः प्रथमदर्शनादेव द्रौपदीश्रीकृष्णमहिषीणां परस्परविवाहप्रश्नोऽपि संगच्छते। अत्र, आगमिष्यत्यदीर्घेण कालेन व्रजमच्युत इत्यादिकमपि पद्यं सहायं भवेत्। प्रकृतमनुसरामः। अथ वृन्दावनं प्रस्थापितानामपि तेषां पुनरपि निजादर्शनेन महा-सन्तापवृद्धिमतीवोत्कण्ठाभिः श्रीगोविन्दः सस्मार, यामेव साक्षाद्-दृष्टवान् परमोत्कण्ठः श्रीमदुद्धवः। तमवसरं लब्ध्वा प्रस्तावान्तरे, गायन्ति ते विशदकर्म्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मवि-मोक्षणञ्च। गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयञ्चेति व्यञ्जयामास। ततश्च राजसूयसमाप्त्यनन्तरं शाल्व-दन्तवक्रवधान्ते झटिति स्वयं गोकुलमेव जगाम। तथाच पाद्मो-त्तरखण्डे गद्यपद्यानि। अथ शिशुपालं निहतं श्रुत्वा दन्तवक्रः कृष्णेन योद्धुं मथुरामाजगाम। कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुरायामाययौ। तयोर्दन्तवक्रवासुदेवयोरहोरात्रं मथुराद्वारे संग्रामः समवर्त्तत। कृष्णस्तु गदया तं जघान। स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नो महीधर इव गतासुरवनीतले पपात। सोऽपि हरेः सारू-प्येण योगिगम्यं नित्यानन्दसुखदं शाश्वतं परमं पदमवाप। इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृताववतीर्य्य जन्मत्रयेऽपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ। कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्य नन्दव्रजं गत्वा सोत्कण्ठौ पितरा-वभिवाद्याश्वास्य ताभ्यां साश्रुकण्ठमालिङ्गितः सकलगोपवृन्दान् प्रण-म्याश्वास्य बहुवस्त्राभरणादिभिस्तत्रस्थान् सर्वान् सन्तर्पयामास। कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाचिते। गोपनारीभिरनिशं क्रीड़यामास केशवः। रम्यकेलिसुखेनैव गोपवेशधरः प्रभुः। बहु-प्रेमरसेनात्र मासद्वयमुवास हेति। अत्रेदं ज्ञेयम्। दन्तवक्रस्य मथुरायामागमनं राजसूयानन्तरमिन्द्रप्रस्थे श्रीकृष्णावस्थानं ज्ञात्वा जरासन्धवधार्थं श्रीमदुद्धवयुक्तिच्छायामवलम्ब्य गदाकुशलम्मन्यत्वेन-

काकिनं द्वन्द्वयुद्धाय तमाह्वयितुं तदर्थमेव तद्राष्ट्रं तदुपद्रावयितुञ्च। पुनश्च द्वारकागतं तं श्रुत्वा प्रस्थितस्य तस्य मथुराद्वारगतेन सङ्गमः। यत् स्थानमद्यापि द्वारकादिग्गतं दतिहेति प्रसिद्धं वर्त्तते। सर्वमेतत् श्रीनारदस्य श्रीभगवद्ग्रथस्य च मनोमयत्वात् सम्भवति। अतः श्रीभागवतेनापि विरोधो नास्तीति अलं कल्पभेदकल्पनया। यत एव झटिति तस्य शाल्वबधश्रवणमपि तत्रोक्तं सम्पद्यते। तथा श्रीकृष्णस्य गोकुलगमनञ्च श्रीभागवतसम्मतमेव। तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः। सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैरिति। यात यूयं व्रजं तात वयञ्च स्नेहदुःखितान्। ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति। हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम्। यदाह वः समागत्य कृष्णः सत्यं करोति तदिति। आगमिष्यत्यदीर्घेण कालेन व्रजमुच्यतः। प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिरिति च। तस्य श्रीमुखेन भक्तमुखेन च बहुशः संकल्पानामन्यथानुपपत्तेः, सत्यसंकल्प इति हि श्रुतेः। ईश्वराणां वचः सत्यमिति स्वयं श्रीभागवतञ्च। न केवलमेतावदेव कारणं, तस्य व्रजागमनमपि स्फुटमेवेत्याहुः—यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वाथ सुहृद्दिदृक्षया इति ॥ १७४ ॥

अत्र मधून् मथुरां वेति व्याख्याय तदानीं तन्मण्डले सुहृदो व्रजस्था एव प्रकटा इति तैरप्यभिमतम्। तत्र योगप्रभावेन नीत्वा सर्वं जनं हरिरित्यत्र सर्वशब्दात् ॥ १ ॥ ११ ॥ द्वारकावासिनः श्रीभगवन्तम् ॥ १७४ ॥

तदेतदागमनं दन्तवक्रबधानन्तरमेव श्रीभागवतसम्मतम्। यतः, ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति कंसबधान्ते, अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया। गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः॥ इति कुरुक्षेत्रयात्रायाञ्च, श्रीभगवद्वाक्येन तदनागमने दन्तवक्रबधान्तशत्रुपक्षक्षपणसुखदानमेवापेक्षितमा-

सीत्। तदेवं मासद्वयं प्रकटं क्रीड़ित्वा श्रीकृष्णोऽपि तानात्म-विरहार्त्तिभयपीड़ितानवधाय पुनरेवं माभूदिति भूभारहरणादिप्रयो-जनरूपेण निजप्रियजनसङ्गमान्तरायेण संवलितप्रायां प्रकटलीलां तल्लीलावहिरङ्गेणापरेण जनेन दुर्वेदतया तदन्तरायसम्भावनालेश-रहितया तया निजसन्ततप्रकटलीलयैकीकृत्य पूर्वोक्ताप्रकटलीलाव-काशरूपं श्रीवृन्दावनस्यैव प्रकाशविशेषं, तेभ्यः, कृष्णञ्च तत्र छन्दोभिः स्तूयमानमित्याद्युक्तदिशा, स्वेन नाथेन सनाथं श्रीगोकुलाख्यं पद-माविर्भावयामास। एकेन प्रकाशेन च द्वारवतीञ्च जगामेति। तथा पाद्मोत्तरखण्ड एव तदनन्तरं गद्यम्। अथ तत्रस्था नन्दादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेवप्रसादेन दिव्यरूप-धरा विमानमारूढ़ाः परमवैकुण्ठलोकमवापुरिति। कृष्णस्तु नन्द-गोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूयमानो द्वारावतीं विवेशेति च। तत्र नन्दादयः पुत्रदारसहिता इत्यनेन, पुत्राः श्रीकृष्णादयः, दाराः श्रीयशोदादय इति लब्धे, पुत्रादिरूपैरेव श्रीकृष्णादिभिः सह तत्प्राप्तेः कथनात्, प्रकाशान्तरेण तत्र तेषां स्थितिः तैरपि नावगतेति लभ्यते। वासुदेवप्रसादेनाक-स्मात् आगमनरूपेण परमप्रसादेन दिव्यरूपधरास्तदानन्दोत्फुल्लतया पूर्वतोऽप्याश्चर्यरूपाविर्भावं गता इत्यर्थः। विमानमारूढ़ा इति गोलो-कस्य सर्वोपरिस्थितिदृष्ट्यपेक्षया। वस्तुतस्त्वयमभिसन्धिः। कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्येति गद्यानुसारेण यमुनाया उत्तरपार एव व्रजवासस्तदानीमित्यवगम्यते। स च तेषां वृन्दावनदर्शनाक्षमतया एव तत्परित्यागेन तत्र गतत्वात्। ततश्च विमानशिरोमणिना स्वेनैव रथेन पारप्रापणपूर्वकं श्रीमद्गोपेभ्यः श्रीवृन्दावन एव पूर्वं गोलोकतया दर्शिते तत्प्रकाशविशेष एव निगूढ़ं निवेशनं वैकुण्ठा-वाप्तिरिति। अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायेन। समीपार्थेऽव्ययमर्कशब्दः। न वेद स्वां गतिं भ्रमन्निति वदता

श्रीभगवता तेषां गतित्वेनापि विभावितोऽसौ लोकः। तस्माद् वृन्दावने निगूढ़प्रवेश एव समञ्जसः। अत्र वृन्दावननित्यलीलावाक्यवृन्दञ्चाधिकमप्यस्ति प्रमाणम्। अथ गद्यान्ते द्वारावतीं विवेशेति च शाल्ववधार्थं निर्गतैः श्रीभगवत्प्रत्यागमनं प्रतीक्षमाणैर्यादवैः सहैवेति श्रीभागवतवदेव लभ्यते। तं विना स्वयं गृहप्रवेशानौचित्यात्। क्षणार्द्धं मेनिरेऽर्भका इतिवदल्पकालभावनेन वा। तदेवं पुनः श्रीगोकुलागमनाभिप्रायेणैव श्रीवृन्दावननाथोपासनामन्त्रे निहतकंसत्वेन तद्विशेषणं दत्तम्। यथा बौधायनोक्ते—गोविन्दं मनसा ध्यायेद्गवां मध्ये स्थितं शुभमिति ध्यानानन्तरं, गोविन्द गोपीजनवल्लभेश कंसासुरघ्न त्रिदशेन्द्रवन्द्य इत्यादि। अन्यत्र च—गोविन्द गोपीजनवल्लभेश विध्वस्तकंसेत्यादि। इत्थमेव पुनः प्राप्त्यभिप्रायेणोक्तम्—अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथेति। दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापन इति। गोपीनां स गुरुर्गतिरिति च। तथैव केवलेन हि भावेनेत्यादिपद्यद्वयक्रतेन साधकचरीणां गोपीनां प्रथमं तत्प्राप्तिप्रस्तावेन नित्यप्रेयसीनामपि तन्महावियोगानन्तरप्राप्तिं तस्य वियोगस्यातीतत्वनिर्देशाद्द्रढ़यति द्वाभ्याम्—रामेण सार्द्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः। विगाढ़भावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय। तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण। क्षणार्द्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः॥ १७५॥

अत्र विगाढ़भावेन वियोगतीव्राधयः सत्यो मत्तोऽन्यं निजसख्यादिकमपि न सुखाय ददृशुः। ततश्चाधुना तु सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः। एवं तास्ताः क्षपाः मया हीनाः सत्यः कल्पसमा बभूवुरधुना तु तादृश्यो न भवन्तीति नास्त्येव वियोग इत्यर्थः। ततश्च प्रकटाप्रकटलीलयोः पृथक्त्वाप्रतिपत्त्यैवाप्रकटभावमापद्य स्वनामरूपयोरेव ताः स्थिता इत्याह—ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथे-

दम्। यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे॥ १७६ ॥

तास्तथाभूतविरहौत्कण्ठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सख्यः अथ कदाचित्तासां दर्शनार्थं गते मयि लब्धो योऽनुषङ्गो महामोहनभावाभिव्यक्तिकारी पुनः संयोगस्तेन बद्धा धीर्यासां तथाभूताः सख्यः स्वं ममतास्पदम् आत्मानमहङ्कारास्पदञ्च अदः अप्रकटलीलानुगतत्वेनाभिमतं वा तथा इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथास्यात्तथा नाविदन्। किन्तु द्वयोरैक्यं नैवाविदुरित्यर्थः । प्रकटाप्रकटतया भिन्नं प्रकाशद्वयमभिमानद्वयं लीलाद्वयञ्चाभेदेनैवाजानन्निति विवक्षितम् । ततश्च नाम च रूपञ्च तस्मिन् तत्तन्नामरूपात्मनि अप्रकटप्रकाशविशेषे प्रविष्टा इव न तु प्रविष्टा वस्त्वभेदादित्यर्थः । नामरूप इति समाहारः । तत्र प्रकटाप्रकटलीलागतयोर्नामरूपयोरभेदे दृष्टान्तः, यथा समाधौ मुनय इति । समाधिरत्र शुद्धजीवस्येति गम्यम् । तयोर्लीलयोर्भेदावेदने दृष्टान्तः, यथाब्धितोये नद्य इति । यथा नद्यः पृथिवीगतामब्धितोयगताञ्च स्वस्थितिं भेदेन न विन्दन्ति, किन्तूभयस्यामपि स्थितौ समुद्रतोयानुगतावेवाविशन्ति, तथा, मदनुषङ्गे सति प्रकटामप्रकटाञ्च लीलास्थितिं ताश्च भेदेन न विदुः, किन्तु मय्येवाविशन्नित्यर्थः । दृष्टान्तस्त्वयं लीलाभेदावेदनांश एव, न तु सर्वाविदनांशे, लोकवत्तु लीलाकैवल्यमितिवत्। तदेवं प्रकटाप्रकटलीलयोर्द्वयोरपि तासां स्वप्राप्तौ भाव एव कारणं दर्शितम् । ततश्चाप्रकटलीलायां प्रविष्टा अपि यादृशं तस्य स्वरूपं प्रापुस्तद्दर्शयन्नन्यदप्यनुवदति—मत्कामा रमणं जारं मत्स्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः इति॥ १७७ ॥

एवं पूर्वोक्तरीत्या ता अबला ब्रह्म प्रापुस्तच्च परमं भगवद्रूपं प्रापुः । ब्रह्मणो हि प्रतिष्ठाहमित्यादेः । तदेवं स्थिते तासां मदंशभूतानां नित्यप्रियाणां सङ्गादन्या अपि तदानीमेव गोकुलभाजः शतसहस्रशः

प्रापुः । सङ्गस्य तत्प्रापकत्वञ्च झटिति समानभावजनकत्वात् । यथोक्त-मेतत् पूर्व्वमेव—केवलेन हि भावेन गोप्यो गाव इत्यादि । एवं गवादि-ष्वपि द्विविधत्वं गम्यम् । किमाख्यं प्रापुस्तत्राह, मां कृष्णाख्यमेव नराकृति परं ब्रह्मेति पुराणवर्गात्, योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भविता कथमस्यावतारस्य ब्रह्मता भवतीति तापनीभ्यश्च । कीदृश-सम्बन्धं त्वां प्रापुस्तत्राह, रमणं जारमिति । रमणः पतिर्नन्दनशब्दवद् यौगिकत्वबाधात् । यथा मित्रापुत्रो मित्रानन्दन एवोच्यते, न तु मित्रापतिः । मित्रापतिरपि मित्रारमण एवोच्यते, न तु मित्रापुत्र इति । ततश्चायमर्थः । यथा भीष्मसमुदायदर्शनीयं कटं करोतीत्यत्र क्रिया खलु विशेष्यस्य कृतिं प्रत्याययन्ती विशेषणानामपि प्रत्याययति, कटं करोति तञ्च भीष्ममित्यादिरीत्या, तथात्रापि प्राप्तं ब्रह्म प्रापुस्तच्च परमं भगवद्रूपं तच्च मां श्रीकृष्णाख्यं स्वयं भगवद्रूपमित्यादिरीत्या । किन्तु जारमित्युक्तेरेव रमणविशेषत्वे लब्धे, रमणपदमधिकं स्यादित्यक्षरा-धिक्येनार्थाधिक्यमिति न्यायादधिकार्थमेव बोधयति । तत्र चाधिक-पदस्यैवार्थः पर्य्यवस्यतीति प्रयत्नेनोपादानाज्जारत्वञ्च प्रातीतिकमा-त्रम् । गोपीनां तत्पतीनाञ्चेत्यादेः । किन्तु साधारणेष्वपि परब्रह्मणः सर्व्वांशित्वात् सर्व्वपातृत्वाच्च पतित्वमेव । तथोक्तं पिङ्गलया, आत्मना रमणेन वै इति, रमेऽनेन यथा रमेति । लक्ष्मीदेव्या च, स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनमिति । तस्मात् पूर्व्वं यं जारत्वेन प्रतीतं प्रापुः, पश्चान्निजरूपमेव तं प्रापुरिति । तथा जार-मित्येवोक्ते पर्य्यवसितं न सिद्ध्येदिति रमणमित्युच्यते । रमणमित्येवोक्ते भगवत्त्वं श्रीकृष्णरूपत्वञ्च न सिद्ध्यति, मामित्येवोक्ते ब्रह्मत्वं भगव-त्त्वञ्च प्रमाणान्तरसाकाङ्क्षं भवति, इति साक्षादेव तत्तदुच्यते । पूर्व्वप्रती-तत्वाद्रमणपदेनापि जारत्वमेव प्रतीयेतेति तन्निरासार्थं तत्तदनुवादस्या-वश्यं कार्य्यः । ब्रह्म मां परममित्येषु पदेषु पाठक्रमस्याविवक्षितत्वा-ज्जारभावस्य च पूर्व्वत्वादार्थिक एव क्रमो लभ्यते । एष एव च सर्व्वत्र

बलीयान्। ततो न विपर्य्ययेणार्थश्च कार्य्यः। किञ्च अप्राप्ते हि शास्त्रमर्थवदिति न्यायेन, दध्ना जुहोतीत्यादिवदप्राप्ते रमणपद एव तात्पर्य्यं, न तु पूर्वपूर्वप्राप्ते ब्रह्मादिजारपर्य्यन्ते। नन्दगोपसुतं देवि पतिं मे कुरु ते नमः। इति व्रतजपानां कुमारीणान्तु पतिभावनापूर्त्तेति चेत्तर्हि तासामनवद्यभावानां सङ्कल्पसिद्धिरेव श्रीभगवता सुतरां कार्य्या। तत्रैव च स्वयमङ्गीकृतं याताबला इत्यादौ सिद्धा इति मयेनि च। सर्वत्र पर्य्यवसाननिरुपद्रवेष्टप्राप्तिरेव खलु सिद्धान्तरसशास्त्रयोः सम्मता। प्राचीनैराधुनिकैश्च लौकिकालौकिकवर्णकैः कविभिस्तथैवोपाख्यायते। श्रीमदस्मदुपजीव्यचरणैरपि ललितमाधवे तथैव समापितम्। श्रीभगवता च, यत्त्वहं भवतीनां वै इत्यादिना या मया क्रीड़िता रात्रामित्याद्यन्तेन तथैवाभिप्रेतम्। जारभावमयः सङ्गमश्च सदैव सोपद्रवस्तस्मादसौ पर्य्यवसानपुरुषार्थत्वे तत्तच्छास्त्रसम्मतो न स्यात्। तथा परकोटिसंख्यानां निजपदाब्जदलैरित्यादियुगले कुजगतिं गमिता न विदामः कश्मलेन कवरं वसनं वेति चेत्यादिरीतीनामुद्भटमहाभावानां तासां व्रजे भावसगोपनं पूर्वमपि दुष्करमासीत्। महाविरहे तु जाते, निवारयामः समुपेत्य माधवं किन्नोऽकरिष्यन् कुलवृद्धबान्धवा इति, विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति चेति, ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका इति, कृष्णदूते व्रजायाते उद्धवे त्यक्तलौकिका इति,गतह्रिय इति,काचिन्मधुकरं दृष्ट्वेति,या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वेति, गोप्यो हसन्त्यः पप्रच्छ रामसन्दर्शनादृता इति, मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि यदर्थे जहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो इति च श्रूयते। अत्र निवारयाम इत्यादिकं यथा संक्लृप्तं तथैव विसृज्य लज्जामित्यादिनाचरितम्। तासां लज्जात्यागः खलु भावव्यक्त्यैव स्यात्, सर्वेषां गोकुलवासिनां रोदनादिसाम्यात्। ततस्तद्व्यक्तिपूर्वकरोदनद्वारेण ताभिर्निवारणमपि योग्यमिति। एवं त्यक्तलौकिका इत्यादिषु च सुष्ठ्वेव भावव्यक्ति-

गंस्यते। किं बहुना मातरमित्यादौ मात्रादीन् जहिम इत्युक्तं न तु पूर्वरागवत् पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य रतिमात्रमुक्तम्। गोप्यो हसन्त्य इति तून्मादलक्षणं, तदानीं हासायोग्यत्वात्, यथैव काचिन्मधुकरं दृष्ट्वेत्यादावुन्माद एव दृश्यते। तदेवं तदानीन्तु दुर्द्धरमहाभावेनोन्मत्तचेष्टानां निरपत्रपव्यञ्जितभावानां त्यक्तमात्रादीनां तासामसंख्यानां भावस्य संगोपनं नोपपद्यत एव। किन्तु ज्ञातोऽप्यसौ महाविरहपीड़या सर्वैरज्ञात इव आसीत्। अनन्तरं त्वनुसन्धेय एव। स तु भावसंगोपनयैव कालकतिपयं स्वस्य रसतामावहति। व्यक्तत्वे तु स्वस्य परेषामपि सर्व एव स्तुतो धर्म्ममयत्वप्रतीतौ जातायामेवेति रसविदां मतम्। अधर्म्ममयत्वप्रतीतौ त्वश्लीलतया व्याहन्यत एव रसः। अधर्म्ममयत्वञ्च द्विधा ; परकीयात्वेन परस्पर्शेन च। तस्माद् यथैश्वर्य्यज्ञानमय्यां श्रीपरीक्षित्सभायाम् ऐश्वर्य्यज्ञानरीत्यैव तत् परिहृत्य रसावहत्वं समाहितम्। तथा लोकवल्लीलाकैवल्यावलम्बने प्रेममय्यां श्रीगोकुलसभायां लोकरीत्यैव समाधेयम्। तथाहि—नासूयन् खलु कृष्णाय मोहितास्तस्य मायया। मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः। इति यत् श्रूयते तस्याप्ययमर्थः। मायया मोहिताः सन्तो नासूयन्, तस्य स्वनित्यप्रेयसीस्वीकारलक्षणे कथमसावस्मद्रामार्थसुहृत्प्रियात्मतनयप्राणाशयजीवातुतमः परदारस्वीकारामङ्गलमङ्गीकरोतीति दोषारोपं नाकुर्वन्नित्यर्थः। मायामोहितत्वमेवाह, मन्येति। स्वरूपसिद्धानां भगवद्दाराणां अपरकर्त्तृकबलात्कारपरिहारार्थं तत्तदाकारतया मायाकल्पिता ये स्वे स्वे दारास्तान् स्वपार्श्वस्थान् मन्यमानाः स्वमत्या निश्चिन्वाना इत्यर्थः। परमसमर्थायास्तस्या मायाया निजप्रभुप्रेयसीनां तदेकानुरागस्वभावानां मर्य्यादारक्षणार्थं परिणयमारभ्य सदैव सावधानतायां योग्यत्वात्तद्दिनमुपलक्षणमेवेति। तदेवञ्च तत्पतिंमन्यादिष्वेव विवाहादिशयनादिसमयेष्वेव च स्वरूपसिद्धा आवव्रिरे। अन्येषु चान्यदा च कल्पित

एवेति गम्यते। तावदेव च युक्तं, तासु मर्य्यादारक्षणोत्कण्ठावर्द्धनैकप्रयोजनत्वात्तस्याः। यथैव हि, तव सुतः सति यदाधरबिम्बे दत्ता वेणुरित्यादौ, शुश्रूषन्त्यः पतीन् काश्चिदित्यादौ, ता वार्य्यमाणा पतिभिरित्यादौ च स्वरूपसिद्धानामेव दर्शनं तत्र तत्रावगतम्। एवमन्यत्राप्यवगम्यम्। तासामन्यकृतध्वंसाभावस्य कारणं प्रभावश्च संभाव्यते, य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुरा इति कैमुत्यप्राप्तेः। अथ तासामपत्यश्रवणञ्च यात्वप्रभृतीनामपत्ये तद्व्यवहारात्। स्वापत्यत्वे सति विभाववैगुण्ये न रसाभासत्वमापद्येत। ततश्च भजते तादृशीः क्रीड़ा याः श्रुत्वा तत्परो भवेदिति, सिषेवेत्यादौ सर्वाः शरत्काव्यकथारसाश्रया इति च विरुध्येत। परपुत्रत्वप्रतिपादनायैव हि पाययन्त्यः शिशून् पय इत्येवोक्तं, न तु सुतान् स्तनमिति। अतएव मातरः पितरः पुत्रा भ्रातरः पतयश्च व इति परिहासत्वेनैव श्रीभगवद्वाक्यं रसाय सम्पद्यते, वास्तवत्वेन तु वैरस्यायैव स्यात्, तासामङ्गीकरिष्यमाणत्वात्। क्वचित्ताभिरेव तेषु यत् पतिशब्दः प्रयुक्तस्तद्वहिर्लोकव्यवहारत एव नान्तर्दृष्टितः, यत् पत्यपत्यसुहृदामित्यादिना तदङ्गीकारात्, मामेव दयितं प्रेष्ठमात्मानं मनसा गता इति भगवता तासामन्तःकरणप्रकाशनात्। गोप्यः किमाचरदयमित्यादौ दामोदराधरसुधामपि गोपिकानां स्वमित्यनेन ताभिः स्वयमुक्तेश्च। तत एतदुक्तं भवति, रासपञ्चाध्याय्यां, नासूयन् खलु कृष्णायेत्युक्तदिशा, स वो हि स्वामीति ताः प्रति तापनीस्थितदुर्वाससो वाक्यवत्, कृष्णवध्व इत्युक्तरीत्या च, याः खलु योगमायामुपाश्रित इति श्रवणात्तत्तदर्थंभगवन्नियुक्तयोगमायाकल्पिताकल्पिततया योगमायैकविदिताः, स्वतः परतश्च प्रच्छन्नहृद्विधायमाना आसन्, तास्तु पश्चाद् योगमाययैव देव्या प्रापिताभ्यां मर्य्यादोत्कलिताभ्यां स्वपालितस्य रसपोषतरोः पर्य्यवसाननिरुपद्रवमहासुखप्राप्तिरूपाय फलाय मृत्यात्मकशादिवारणादिकं द्वारीकृत्य वा स्वयमेव प्रकटीभूय एव वा श्रीगो-

कुलवासिनः प्रति तथैव व्यक्तीकृताः, स्वरूपेण मामेव रमणं प्राप्ताः, नासूयन् खलु कृष्णायेत्याद्युक्तासूयापरिहारस्य सम्यक्त्वाय तल्लक्षितास्तु स्वस्वपतिमित्येव श्रीभगवन्मतम्। दृश्यते च, संज्ञाछायादिवत् कल्पनाया व्यक्तत्वमेव परिणामः सर्वत्र। तदित्थमेव मातापित्रादीनामभीष्टं सिध्यति ॥ ११ ॥ १२ ॥ श्रीभगवान् ॥ १७७ ॥

पूर्वोक्त एवाप्रकटलीलाप्रवेशप्रकटलीलाविष्काररूपोऽर्थस्तदनन्तरप्रश्नोत्तराभ्यामप्यभिप्रेतोऽस्ति। प्रश्नस्तावत् श्रीउद्धव उवाच।

संशयः शृण्वतो वाचं तव योगेश्वरेश्वर।
न निवर्त्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १७८ ॥

तव वाचं शृण्वतोऽवधारयतोऽपि ममात्मस्थः संशयो मयोदितेष्ववहित इत्यादिकाध्यायत्रयगतमहावाक्यार्थपर्य्यालोचनासामर्थ्यं न निवर्त्तते। कुतः, येन यत एव, रामेण सार्द्धं मथुरां प्रणीते इत्यादिलक्षणात्तव वाक्यान्मम मनो भ्राम्यति। हन्त तासामनेन सङ्गमः कुत्र कथं विद्यते इति चिन्तया न स्वस्थं वर्त्तत इत्यर्थः। अथोत्तरम्। तत्र तस्य संशयमपनेतुं द्वाभ्यां तावत्तच्चित्तं स्वस्थयन् श्रीभगवानुवाच।

स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः। मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७९ ॥

स एष मल्लक्षणो जीवो जगतो जीवनहेतुः विशेषतो व्रजस्य जीवनहेतुर्वा परमेश्वरः प्राणेन मत्प्राणतुल्येन घोषेण व्रजेन सह विवरप्रसूतिर्विवरादप्रकटलीलातः प्रसूतिः प्रकटलीलायामभिव्यक्तिर्यस्य तथाभूतः सन् पुनर्गुहां अप्रकटलीलामेव प्रविष्टः। कीदृशः सन् किं कृत्वा, मात्राः मम चक्षुरादीनि स्वरो भाषागानादिः वर्णो रूपमिति इत्यं स्थविष्ठः स्वपरिजनानां प्रकट एव सन् अन्येषां सूक्ष्ममदृश्यं वहिरङ्गभक्तानाञ्च मनोमयं कथञ्चिन्मनस्येव गम्यं यद्रूपं प्रकाशस्तदुपेत्य। प्रकटलीलाविष्कारञ्च सदृष्टान्तं स्पष्टयति।

यथानलः खेऽनिलबन्धुरुष्मा बलेन दारुण्यधिमथ्यमानः । अणुः प्रजातो हविषा समिधते तथैव मे व्यक्तिरियं हि वाणी ॥ १८० ॥

दृष्टान्तोऽयं गर्भादिक्रमेणाविर्भावमात्रांशे । तृतीयेऽपि । तदुक्तं श्रीमदुद्धवेनैव । अजोऽपि जातो भगवान् यथाग्निरिति । व्यक्तिराविर्भावः । हि यस्मादियं स्वरहस्यैकविज्ञस्य ममैव वाणी नात्रासम्भावना विधेयेत्यर्थः । ततश्चानन्तरं वक्ष्यमाण एवं गदिरित्यादिग्रन्थस्तु संशयापनोदने व्याख्येयः । एवं पूर्वोक्तवाक्यस्यैवार्थभेदेन गदिर्लौकिकभाषणमिति ज्ञेयं, तस्याप्युत्पत्तिर्ज्ञेयेत्यर्थः । स च सतात्पर्य्यकोऽर्थभेदष्टीकायामेव दृश्यते इति ॥ ११ ॥ १२ ॥ श्रीशुकः ॥ १७८-१८० ॥

तदेवं श्रीमद्भागवते पुनर्व्रजागमनादिरूपोऽयमर्थो बहुधा लब्धोऽपि पाद्मोत्तरखण्डवद् यन्न स्पष्टतया वर्णितस्तत् खलु निजेष्टदेवत्वस्य बहिर्मुखान् प्रत्याच्छादनेच्छया अन्तर्मुखान् प्रत्युत्कण्ठावर्द्धनेच्छयेति गम्यते । अतएवोक्तम्—परोक्षवादा ऋषयः परोक्षञ्च मम प्रियमिति । यदेतत्तु मया क्षुद्रतरेण तरलायितं क्षमतां तत् क्षमाशीलः श्रीमान् गोकुलवल्लभः । तदेतत् श्रीवृन्दावने लीलाद्वयस्य मिलनं सावसरमेव प्रस्तुतम् । द्वारकायान्तु प्रसिद्धमेव । तत्र मौषलादिलीला मायिक्येवेति पूर्वमेव दर्शितम् । वस्तुतस्तु द्वारकायामेव सपरिकरस्य श्रीभगवतो निगूढ़तया स्थितिर्यादवानां च नित्यपरिकरत्वात्तत्त्यागेन स्वयं भगवत एवान्तर्द्धाने तैरतिक्षोभेणोन्मत्तचेष्टैरुपमर्दिता पृथिव्येव नश्येदिति प्रथमं तेषामन्तर्द्धापनम् । अतएवोक्तम्—भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः । मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद् यादवं कुलमहो अविषह्यमास्त इति । अत तेषामधार्म्मिकतया तु पृथिवीभारत्वं न मन्तव्यम् । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूत् वृष्णीनां कृष्णचेतसामित्यादौ शय्यासनाटनालापक्रीड़ास्नानाशनादिषु न विदुः सन्तमात्मान वृष्णयः कृष्णचेतस इत्यादौ च परमसाधुत्वप्रसिद्धेः । पृथ्वीभारस्य

व्यक्तिबाहुल्यमात्रेण नेष्यते पर्वतसमुद्रादीनामनन्तानां विद्यमानत्वात्। तथा न वस्तुत्र्यमित्यादिभगवद्वाक्यस्य तात्पर्य्यमिदं, माययापि यदूनां तादृशत्वदर्शनं ममानन्दवैभवधाम्नि मदीयजनसुखदमहिलासैकनिधौ द्वारकायां नोचितं, प्रभासे तु तत्तद्योगादुचितमिति। अथच जिजीविषुभिरित्युक्त्वा वृजिनानि तरिष्याम इति चोक्त्वा वस्तुतस्तु तेषां तादृशत्वं न भविष्यतीत्येवोक्तम्। तत्र चास्माभिरिति वयमिति चोक्त्वा स्वेनैक्यसूचनया स्वात्मवदन्यथाभावत्वमेकगतित्वञ्च व्यञ्जितमिति। तदेवं स्थिते तैः साकं श्रीभगवतो द्वारकायामेव नित्यां स्थितिमाह—द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात्। वर्जयित्वा महाराज श्रीमद्भगवदालयम्। नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः। स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ १८१ ॥

लोकदृष्ट्यैव हरिणा त्यक्तां अत्यक्तामिति वा, नित्यं सन्निहित इति वक्ष्यमाणत्वात्। ततश्चोभयथाप्याप्लावनं परितो जलेन परिखावदावरणं तज्जलमज्जनञ्च समुद्रेणैव श्रीभगवदाज्ञयात्यक्तभूमिलक्षणस्य हस्तिनापुरप्रस्थापितवहिर्जनगृहाद्यधिष्ठानवहिरावरणस्यैव। तत्र रचनं विश्वकर्म्मणा तस्यैव प्रकटलीलायाः प्रापञ्चिकमिश्रत्वात्। अत सुधर्म्मादीनां स्वर्गादागमनञ्च युज्यते। अप्रकटलीलायां ततोऽपि दिव्यतरं सभान्तरादिकमपि स्यात्। श्रीमान् यादवादिगृहवृन्दलक्षणशोभोपशोभावान् यो भगवदालयस्तं वर्जयित्वा। तदेवमद्यापि समुद्रमध्ये कदाचिदसौ दूरतः किञ्चिद्दृश्यते इति तत्रत्यानां महती प्रसिद्धिः अत्र महाराजेति सम्बोधनं दृष्टान्तगर्भं, यद्वा महान्तो राजानो यादवलक्षणा यत्र तथाभूतं तदालयं श्रीकृष्णनित्यधामरूपं द्वारकापुरम्। न केवलं पुरमात्रास्तित्वं, तत्र च श्रीमति भगवदालये मधुसूदनः श्रीकृष्णो नित्यमेव सन्निहितः, अर्थात्तत्रत्यानां, किं वा न तत्र सन्निहितः, भगवान् यादवादिलक्षणाखिलनिजैश्वर्य्यवानेव। तदालयमेव विशिनष्टि, स्मृत्येति। साक्षादधुना व्यक्ततद्दर्शनाभावात् स्मृत्येत्

त्तम् । यः स्वयमेवम्भूतस्तस्य त्वन्यथा संभावितत्वमपि नास्तीति भावः । एवमेव विष्णुपुराणे—प्लावयामास तां शून्यां द्वारकाञ्च महोदधिः । यदुदेवगृहन्त्वेकं नाप्लावयत सागरः । नात्याक्रामत्ततो ब्रह्मं स्तदद्यापि महोदधिः । नित्यं सन्निहितस्तत्र भगवान् केशवो यतः । तदतीव महापुण्यं सर्वपापप्रणाशनम् । विष्णुक्रीड़ान्वितं स्थानं दृष्ट्वा पापात् प्रमुच्यते ॥ ११ ॥ ३१ ॥ श्रीशुकः ॥ १८१ ॥

तदेवमप्रकटप्रकटलीलयोः समन्वयो दर्शितः । एते एव पाद्मोत्तर-खण्डे भोगलीलाशब्दाभ्यामुच्येते—भोगो नित्यस्थितिस्तस्य लीलां संहरते कदेत्यादिना । यां कदाचित् संहरते सा लीलेत्यर्थः । तत्र प्रकटलीलागतभावस्य विरहसंयोगादिलीलावैचित्रीभरवाहित्वेन बल-वत्तरत्वात् उभयलीलैकीभावानन्तरमपि तन्मयस्तेषामभिमानोऽनु-वर्त्तत एव । तत्रैश्वर्य्यज्ञानसम्वलितभावानां श्रीयादवानां स तावन्नून-मेवं सम्भवति, अहो सर्वदैवानन्यजीवातूनामस्माकमीशिता श्रीकृष्णाख्यो भगवानयं नानालीलामृतनिर्झरैः सान्द्रानन्दचमत्कारमासादयितुं यादवशिखामणेर्नित्यमेव पितृभावसमृद्धस्य श्रीमदानकदुन्दुभेर्गृहे स्वान् स्वानलञ्चकार । ततश्च साधितास्मदानन्दसत्रप्रधानविविध-कार्य्यः परमबान्धवोऽसौ परमेश्वरस्तत्तद्रूपानिवास्मान् पुनर्ब्रह्माद्यैरपि दुरधिगमे मथुरानाम्नि द्वारकानाम्नि वा परमधाम्नि नानामाधुरी-धुरीणाभिरात्मलीलाभिरनुशीलित एव विभ्राजते इति । सोऽयमभि-मानः श्रीवृन्दावने तु निजनिजसम्बन्धसम्बायकप्रेमैकानुसारिणां श्रीव्रजवासिनां नूनमेवं समुज्जृम्भते, अहो योऽसौ गोकुलकुलभाग-धेयपुञ्जमञ्जुलप्रकाशो मादृशां दृशां जीवनसञ्चयनिर्म्मञ्छनीयपादला-ञ्छनलेशो वाञ्छातीतसुखसन्ततिसन्तानको महावनव्रजमहाखनिज-निलमणिराविरासीत् । योऽसौ दुष्टभोजराजविसृष्टैः पूतनादिग्रह-समूहैरुपरक्तोऽपि मुहुरनुकूलेन विधिना तेषां स्वयमेव विनाशपूर्वकं चकोरेभ्यः चन्द्रमा इवास्मभ्यं वितीर्ण एवासीत् । योऽसौ तादृशतदीय-

मद्वागुणगणादेव परितुष्यद्भिर्मुनिदेवैरिव दत्तेन केनापि प्रभावेन मुहु-
रपि विपद्गणादात्मक्लेशमगणयन्नेव नः परित्रातवान्। योऽसौ निज-
श्रीजलावण्यरूपगुणविलासकेलिर्विनिगूढ़सौहृद्यप्रकटनचातुरीगुम्फित-
माधुरीभिरस्मान् सुष्ठु पुष्टांश्चकार। योऽसौ लघुनापि गुणाभासेनास्माक-
मानन्दसन्दोहमभिविन्दमानो यद् यदपि मादृशामभिलषितं तदतीतं
वा तत्तदपि प्रतिलवमप्याश्चर्य्यभूतं निजमाधुर्य्यवर्य्यमुल्लासितवान्।
योऽसौ सकलसाधुजनावनाय विख्यापितयादवसम्बन्धस्तद्द्वारा रूय-
मपि च राजन्यासुरसङ्घसंहरणाय यदुपुरीं प्रस्थितवान्। योऽसौ
कार्य्यानुरोधेन तत्रैव चिराय तिष्ठत आत्मनो विप्रयोगेन सन्तप्तबुद्धी-
नुद्धवादिभिरस्मान् सकृदाश्वासयामास। योऽसौ पुनरुत्कण्ठार्कोटि-
समाकृष्टमूर्त्तिभिस्तीर्थव्रज्याव्याजेन कुरुक्षेत्रप्रगतैरस्माभिः क्षारसमु-
द्राकृष्टैरिवामृतवारिधिरुपलब्धो बभूव। योऽसौ तथाविधानस्मा-
नात्मसन्निधौ मासकतिपयं सम्वास्य परमसुखजनतया सुधैव कृताभि-
मानिभ्यो यादवेभ्यो निगूढ़ां कामपि स्नेहमुद्रामस्मासु समुद्घट्य
भवतामेवाहमिति व्यञ्जनया मुहुरेवास्मानभितः सन्धुचितवान्। योऽसौ
श्रीवृन्दावनमेवास्माकमात्मनोऽपि परममभीष्टमिति निष्टङ्क्य शपथादिना
निजझटित्यागमने विस्रभ्य साग्रहमस्मानत्रैव प्रस्थापितवान्। सोऽय-
महो अकृतापरकर्त्तव्यशेष एवास्मान् निजागमनं विना समारब्धप्राण-
कोटिमोचनव्यवसायानाशङ्क्य झटिति स्वयमेव गोकुलं साम्प्रतमागम्य
निजविरहकालव्यालमुखान्निष्कास्य च स्वावलोकनामृतपूरेण सिषे-
वैवास्ते। तत्र च प्रतिक्षणमपि नवनवीकृतेनानन्यसाधारणेन केनापि
स्नेहसन्दोहमयेन केवलेन निजस्वभावविशेषेण, तत्रापि निजसौन्दर्य्य-
वर्य्यामृतपूरप्रपाचयचयनेन, तत्रापि विविधपुष्पादिभूषणपरभागपरि-
भोगेन, तत्रापि विलासमाधुरीधुराविशेषाधानेन, तत्रापि विचित्रगुण-
गणोल्लासचमत्कारविद्याविनोदेन, तत्रापि गोपालनगवाकारणबाल-
क्रीड़नमोहनमन्त्रायितमुरलीवादनादिविभ्रमेण, तत्रापि गोकुलनि-

मनप्रवेशादिलीलाचातुरीमाधुर्य्याडम्बरेण, तत्रापि सुहृदां यथाक्रम-मनुसन्तर्पण-केलिकलाविशेषप्रकाशितकौशलातिशयेनात्मानुपलालयन्ने-वास्ते । येन वयमद्य समयमन्यागमनमपि सम्भालयितुं न पारयाम इति । एतदनुसारेण द्वारकातः समागते श्रीकृष्णे केषाञ्चिद् व्रज-वासिनामेव तदानीन्तनमुक्तासवचनं जयति जननिवास इत्यादिकं श्रीशुकमुखादाविर्भूतमिति व्रजैकान्तभक्ता व्याचक्षते । अस्मिन्नेवार्थ-विशेषस्फूर्त्तिः, सम्भवति च श्रीभागवतस्य विचित्रार्थत्वं, विद्वत्काम-धेनुरूपत्वात् । तथाहि जयति इत्यादि ॥ १८२ ॥

कोऽपि सोऽयमस्माकं जीवनकोटिप्रियतमो विष्वक्प्रचारेण श्रीवृन्दावनस्यैव विशेषतः स्थावराणां जङ्गमानाञ्च तद्विरहाद् यद्दुःखं तन्निहन्ता जयति सर्वोत्कर्षेण वर्त्तते । अर्थाच्छ्रीवृन्दावन एव । श्रीवृन्दा-वनस्य स्थावराणामपि भावो वर्णित एव । केन विशिष्टः, सुस्मितेन श्रीमुखेन । एतेन सदातनमानन्दैकरसत्वं स्वेषु सदैव सुप्रसन्नत्वं च तस्य प्रकाशितम् । किं कुर्वन्, व्रजरूपं यत् पुरं तत्सम्बन्धिन्यो या वनिता जनितानुरागाः कुलवध्वस्तासां कामदेवं सर्वप्रेमानन्दोपरि-विराजमानत्वात्तासां कामस्तु देवः परमदिव्यरूपस्तं वर्द्धयन् । ननु श्रीदेवक्याः पुत्रोऽयमित्येवं वदन्ति, तत् कथं युष्माकमत्रास्मदीयत्वेना-भिमानस्तत्राह, देवक्यां जन्मेति वादो मिथ्यैव लोकख्यातिर्यस्य सः । तर्हि कथं वासुदेव इति नामेत्याशङ्क्याह, जननिवासो जनानां स्वजना-नामस्माकं निवासत्वादाश्रयत्वादेव तथाभिधीयते इत्यर्थः । स्वजनेष्व-स्मासु कृतवासत्वादेव वा । ततश्चाधिकरणे कर्त्तरि वीणादिको वासुः । स च दीव्यति क्रीड़तीति देवश्च स इति विग्रहः । प्रागयं वसुदेवस्येत्या-दिका श्रीगर्गोक्तिरपि नास्मभ्यं भातीति भावः । किमर्थमसौ देवकी-जन्मवादोऽभूदित्याकाङ्क्षायामाह, यदुवराः परिषत् सहायरूपा यत्र तादृशं यथा स्यात्तथा स्वैर्दोर्भिर्भुजप्रायैरर्जुनादिभिरधर्म्मं तत्प्रचुरं दुष्टकुलम् अस्यन्निहन्तुं, लक्षणहेत्वोः क्रियायाः शतृप्रत्ययस्मरणात् ।

तस्यामात्मजन्मनि ख्यापिते ते ते सहाया भविष्यन्तीत्येवमनुसन्धायेत्यर्थः। तथोक्तं कंसवधानन्तरं श्रीकृष्णेन श्रीव्रजेश्वरं प्रति, ज्ञातीन् वो द्रष्टु-मेष्यामो विधाय सुहृदां सुखमिति। अत्र विशेषणेनैव श्रीकृष्णरूप-विशेष्यपदमुपस्थाप्यते, अयमुदयति मुद्राभञ्जनः पद्मिनीनामिति-वत् ॥ १० ॥ ९० ॥ श्रीशुकः ॥ १८२ ॥

अथ तेषां तेन परमानन्देन समयाननुसन्धानमप्युक्तं, व्रजति न हि यत्रापि समय इति। अतस्तेषां श्रीकृष्णागमनपरमानन्दमत्तानां अद्यैवायमागत इतीव सदा हृदि वर्त्तते। तदेवं प्रकटलीलागतभाव-विशेषस्याप्रकटलीलायां प्रवेशाद्बहिरन्तर्द्धानलीलाद्वितयस्यैक्यं दर्शि-तम्। तत्र यद्यपि पूर्वपूर्वमपि तादृशभावस्तेषामनादित एवानुवर्त्तते तथापि तमेव नवनवीकृत्य समुद्दीपयितुं पुनःपुनरवतार इति ज्ञेयम्। तदेवं श्रीकृष्णस्य स्वयं भगवत्त्वं दर्शितम्। तत्रापि श्रीगोकुले तत्प्रका-शातिशयो दृश्यते। स चैश्वर्य्यगतस्तावत् सत्यज्ञानानन्तानन्दरसमात्रैक-मूर्त्ति ब्रह्माण्डकोटीश्वरदर्शनादौ। कारुण्यगतश्च पुतनाया अपि साक्षा-न्मातृगतिदाने। माधुर्य्यगतश्च, व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्दास्तृण-वीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मन इति श्रीपट्टमहिषी-प्रार्थनादौ। अत्र स्थितेऽपि सर्वतोऽपि प्रेमवरीयसीनां तासां तत्-पादस्पर्शसौभाग्ये तन्माधुर्य्यप्रकाशातिशयवैशिष्ट्याभिप्रायेणैव तथोक्ति-सङ्गच्छते। तथैव चोक्तम्—त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं यद्-द्विजद्रुममृगाः पुलकान्यविभ्रन्नित्यादिषु। अतो लीलागतश्चासौ श्लाघ्यं-पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितमित्यादिषु। अतस्तदीयान-मप्युत्कर्ष उक्तः, वृन्दावनं गोवर्द्धनं यमुनापुलिनानि च। वीक्ष्या-सीदित्यादौ। ततः परिकराणान्तु अहो भाग्यमहो भाग्यमित्यादौ इत्थं-सतामित्यादौ नन्दः किमकरोदित्यादौ एताः परमित्यादौ गोप्यस्त-किमचरन्नित्यादौ। तत्रापि तत्रातिशुशुभे ताभिरित्यादौ च तासु प्रका-शातिशयसीमा दर्शिता। ततः सर्वास्वपि तासु अनयाराधितो नूनं भ-

भगवान् हरिरीश्वर इत्यादिभिः प्रेमवरीयस्त्वेन प्रसिद्धायां श्रीराधिकायान्तु किमुतेति ज्ञेयम्। अत्र चेदन्तत्त्वम्। द्वितीये सन्दर्भे खलु परमत्वेन श्रीभगवत्त्वं निरूप्य तस्य शक्तिद्वयी निरूपिता। तत्र प्रथमा श्रीवैकुण्ठादौ श्रीभगवद्वदुपास्या तदीयस्वरूपभूता, यन्मय्येव खलु तस्य सा भगवत्ता। द्वितीया चाद्य तेषां जगद्वदुपेक्षणीया मायालक्षणा, यन्मय्येव खलु तस्य जगत्ता। तत्र पूर्वस्यां शक्तौ शक्तिमति भगवच्छब्दवल्लक्ष्मीशब्दः प्रयुज्यत इत्यपि द्वितीय एव दर्शितम्। ततोऽस्मिन् सन्दर्भे तु स च भगवान् श्रीकृष्णाख्य एवेति निर्द्धारिते तदीया स्वरूपशक्तिस्तु किमाख्येति निर्द्धार्य्या। तत्र द्वयोरपि पुर्य्योः श्रीमहिष्याख्या ज्ञेया। मथुरायामप्यप्रकटलीलायां श्रुतौ रुक्मिण्याः प्रसिद्धेरन्यासामुपलक्षणात्। श्रीमहिषीणां तदीयस्वरूपशक्तित्वं स्कान्दप्रभासखण्डे श्रीशिवगौरीसम्वादे गोप्यादित्यमाहात्म्ये दृष्टम्। "पुरा कृष्णो महातेजा यदा प्रभासमागतः। सहितो यादवैः सर्वैः षट्पञ्चाशत्प्रकोटिभिः। षोड़शैव सहस्राणि गोप्यस्तत्र समागताः। लक्षमेकं तथा षष्टिरेतं कृष्णसुना प्रिये। इत्युपक्रम्य, ततो गोप्यो महादेवि विद्यायाः षोड़श स्मृता। तासां नामानि ते वच्मि तानि ह्येकमनाः शृणु। लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नन्दिनी शोका सुपूर्वविमला चया। शुभदा शोभना पुण्या हंसशीता कला क्रमात्। हंस एव मतः कृष्णः परमात्मा जनार्द्दनः। तस्यैताः शक्तयो देवि षोड़शैव प्रकीर्त्तिताः। चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः। सम्पूर्णमण्डला तासां मालिनी षोड़शी कला। प्रतिपत्तिथिमारभ्य सञ्चरत्यासु चन्द्रमाः। षोड़शैव कला यास्तु गोपीरूपा वरानने। एकैकशस्ताः संभिन्नाः सहस्रेण पृथक् पृथक्। एवं ते कथितं देवि रहस्यं ज्ञानसम्भवम्। य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैरिति। अत्र गोप्यो राज्ञ्य इत्यर्थः। गोपी भूपेऽपीति नामलिङ्गानुशासनात्। लम्बिनी अवतारशक्तिः। सुपूर्वविमला सुविमला। हंसशीतेत्यत्र प्राप्तस्य

हंसशब्दस्य वाच्यमाह, हंस एवेति। स च चन्द्ररूपी चन्द्रदृष्टान्तेनोद्देश्य इत्यर्थः। कलारूपा इति ताश्च शक्तयश्चन्द्रस्यामृतत्वादिकलादृष्टान्तेनोद्देश्या इत्यर्थः। अनुक्तामन्तिमां महाशक्तिमाह, सम्पूर्णेति। सेयन्तु कलासमष्टिरूपा ज्ञेया। दृष्टान्तोपपादनाय चन्द्रस्य तादृशत्वमाह प्रतिपदिति। आसु एतत्तुल्यासु कलासु। विवचितमाह षोड़शैवेति। षोड़शानामेव विद्यारूपत्वात् एतदुपदेशस्य ज्ञानसम्बरहस्यत्वात् तज्ज्ञानस्य वैष्णवतानुमापकलिङ्गत्वाच्च। क्रूराभीषणीशोकानामपि भगवत्स्वरूपभूतानामेव सतीनां मल्लानामशनिरितिवत् श्रीकंषस्य कठिनत्वप्रत्यायकत्वात् मृत्युर्भोजपतेरितिवद्दुर्जनवित्रासकत्वात् असतां शास्तेतिवत्तदीयशोकहेतुत्वादेव च तत्तन्निरुक्तिरुपपद्यते। यथा प्रकाशैकरूपाया एव सूर्य्यकान्तेरुलूकेषु तमआदिव्यञ्जकतेति। अतश्चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृता इति स्फुटमेव स्वरूपभूतत्वं दर्शितम्। तदेवं तासां स्वरूपशक्तित्वे लक्ष्मीत्वं सिध्यत्येव। तदेवमभिप्रेत्य लक्ष्मीत्वमाह—गृहेषु तासामनपाय्यतर्कंकृत् निरस्तसाम्यातिशयेष्ववस्थितः। रेमे रमाभिर्निजकामसंप्लुतो यथेतरो गार्हमेधिकांश्चरन्॥ १८३॥'

टीका च—रमाभिर्लक्ष्म्या अंशभूताभिरित्येषा। स्वरूपशक्तित्वादेव रेम इत्युक्तम्। अतएव निजः स्वकीयः परमानन्दशक्तिवृत्तिविशेषोदयरूपप्रेमविशेषस्वरूपो यः कामस्तेन संप्लुतो व्याप्त इति ॥१०॥५९॥ श्रीशुकः॥ १८३॥

इत्यमष्टानां श्रीपट्टमहिषीणान्तु तत्स्वरूपशक्तित्वं कैमुत्येनैव सिध्यति। तत्र श्रीसत्यभामाया भूशक्तिरूपत्वं पाद्मोत्तरखण्डादौ प्रसिद्धम्। श्रीयमुनायाः कृपाशक्तिरूपत्वं स्कान्दयमुनामाहात्म्यादावित्याद्यन्वेषणीयम्। किन्तु श्रीहरिवंशादौ सत्यभामायाः सौभाग्यातिशयस्य विख्यातत्वात् प्रेमशक्तिप्रचुरभूशक्तित्वं ज्ञेयम्। स्वयं लक्ष्मीस्तु श्रीरुक्मिणी। द्वारकायामभूद्राजन् महामोदः पुरौकसाम्।

रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिमित्यादिषु तस्यामेव भूरिशः प्रसिद्धेः। अतः स्वयं लक्ष्मीत्वेनैव परस्परयोग्यतामाह—अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा। असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः॥ १८४॥

स्पष्टम्॥ १०॥ ५३॥ विदर्भपुरवासिनः परस्परम्॥ १८५॥

तथा—तां रूपिणीं श्रियमित्यादौ या लीलया धृततनोरनुरूपरूपेति॥ १८५॥

स्पष्टम्। अतः स्वयं भगवतोऽनुरूपत्वेन स्वयं लक्ष्मीत्वं सिद्धमेव। अतएव, वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे इत्यत्र, मात्रि अन्तर्भवत्यस्यामिति मात्रापदं बाहुल्यादधिकरण एवौणादिकं ज्ञेयम्। कार्त्स्न्ये अवधारणे मात्रमितिवत्। ततश्च वैकुण्ठप्रसिद्धाया लक्ष्म्या अन्तर्भावास्पदत्वादेषैव लक्ष्मीः सर्वतः परिपूर्णेत्यर्थः। यत्तु, नन्वेवमेतदरविन्दविलोचनाह यद्वै भवान् भगवतोऽसदृशी विभूम्नः। क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः। क्वाहं गुणप्रकृतिरज्ञगृहीतपादा इति तस्या एवोक्तिस्तत्र निजांशाभासम् एव दैन्येन स्वं मत्वोक्तमिति मन्तव्यम्। यद्वा गुणा गौणी प्रकृतिः स्वभावो यस्याः सा अपकृष्टरूपेत्यर्थः। यथा तत्रैव, स्यान्मे तवाङ्घ्रिवरणं सृतिभिर्भ्रमन्त्या इति मनुष्यावतारताभिनिवेशात्तस्या एव दैन्योक्तिः। अत्र दैवप्रेरितो वास्तवोऽर्थस्त्वेवं, हेऽरविन्दलोचन, भगवतस्तवासदृश्यहमित्येतद् यद्भवानाह ननु निश्चितं तत्त्वेवं वक्ष्यमाणप्रकारकं नत्वन्यप्रकारकम्। तथैवाह, स्वे स्वरूपभूते महिम्नि ऐश्वर्यादावभिरतो भगवान् क्व कुत्रान्यत्र, तथाहं वा ते गुणा ऐश्वर्यादय एव प्रकृतिः स्वरूपं यस्यास्तथाभूता क्व कुत्रान्यत्र, किन्तु न कुत्रचिदन्यत्रेति द्वयोरेकत्र एव स्वरूपे स्थितिरित्यर्थः। अतएवाज्ञेरस्य श्रीविष्णोस्तवातत्त्वज्ञैर्गृहीतौ सेवितौ] पादौ यस्यास्तथाभूताहं तस्माच्छक्तिशक्तिमतोरत्यन्तभेदाभावादेवोपमानोपमेयत्वाभावेन सादृ-

श्याभाव इति भावः। एवं स्तुतिभिर्ब्रह्मन्त्या इत्यत्रापि हि त्वदीयपदवीभिरित्येव वास्तवोऽर्थः। तदुक्तम्—देवत्वे देवदेहेयं मनुष्यत्वे च मानुषीति। एवमेव, अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः। यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पे त्यत्रापि तस्याः प्रकृतित्वं दैन्यजेनाभेदोपचारेणैव व्याख्येयम्। यद्वा अस्य गार्हस्थ्यस्य उपात्ता अङ्गीकृता रजोऽतिमात्रा सर्वभूतानुरञ्जनातिशयो येन सः। वास्तवार्थस्त्वेवम्। यदुक्तमुदासीना वयमित्यादिश्रीभगवता तत्राह, अस्त्विति। हे अम्बुजाक्ष, आत्मन् आत्मनि मयि च रतस्य ते चरणानुरागो ममास्तु, मयि रतत्वञ्चोक्तं, तथाहमपि तच्चित्तो निद्राञ्च न लभे निशि इति स्वयमेवेति भावः। नन्वात्मरतस्य मम कथं त्वयि रतिस्तत्राह अनतिरिक्तदृष्टेः। शक्तिमत्यात्मनि शक्तौ च मय्यनतिरिक्ता पृथगभावशून्या दृष्टिर्यस्य। शक्तिशक्तिमतोरपृथग्वस्तुत्वाद्द्वयोरपि मिथो विशिष्टतयैवावगमाद्वा युज्जत एव मय्यपि रतिरिति भावः। तदेवं सत्यामपि स्वाभाविक्यां रतौ विशेषतस्तु, यर्हि अस्य रत्याख्यस्य भावस्य वृद्धये उपात्ता रजोऽतिमात्रा रागातिशयो येन तथाभूतस्त्वं मामीक्षसे सभावमालोकयसि, तदासौ नोऽस्मान् प्रति परमैवानुकम्पेति। एवमुदासीनत्वं तव साक्षान्मत्सम्बन्धादन्यत्रैवेति मम सुदृढ़ एव विश्वास इति भावः। तस्मात् साधूक्तं या लीलया धृततनोरित्यादिना श्रीरुक्मिणीदेव्याः स्वयं लक्ष्मीत्वम् ॥ १० ॥ ६० ॥ श्रीशुकः ॥ १८५ ॥

अथ वृन्दावने तदीयस्वरूपशक्तिप्रादुर्भावाश्च श्रीव्रजदेव्यः। यथा ब्रह्मसंहितायाम्—आनन्दचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः। गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामि इति। ताभिः श्रीगोपीभिर्मन्त्रे तच्छब्दप्रयोगात्। कलाभिः शक्तिभिः। निजरूपतया स्वस्वरूपतया। शक्तित्वञ्च तासां पूर्वोक्तोत्कर्षेण परमपूर्णप्रादुर्भावानां सर्वासामपि लक्ष्मीत्वमेव। तदुक्तं

तत्रैव, लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमिति, श्रियः कान्ताः कान्तः परमपुरुष इति। एतदभिप्रेत्यैव स्वायम्भुवागमेऽपि श्रीभूलीला-शब्दैस्तत्प्रेयसीविशेषत्रयमुपदिष्टम्। तस्माल्लक्ष्मीतोऽप्युत्कर्षवर्णन-मासां परमव्योमादिस्थितास्यस्तन्नाम्नैव प्रसिद्धाभ्यो लक्ष्मीभ्य आधिक्य-विवक्षयेति मन्तव्यम्। श्रीवृन्दावनलक्ष्म्यस्त्वेता एवेति। एवमेव पादन्यासैर्भुजविधुतिभिरित्यादौ कृष्णवध्व इत्युक्तम्। अतएव गोपी-जनाविद्याकलाप्रेरक इत्यत्र तापनीवाक्ये श्रीमद्दशाक्षरस्थनामनि-रुक्तौ ये गोपीजनास्ते आ सम्यग् या विद्या परमप्रेमरूपा तस्याः कला वृत्तिरूपा इति व्याख्येयम्। राजविद्या राजगुह्यमित्यादि-श्रीगीताप्रकरणात्, व्याख्यान्तरे भगवत्यविद्यासंश्लेषाभावात्। तदुक्तम्—ह्लादिन्या सम्बिदाश्लिष्टः सच्चिदानन्द ईश्वरः। स्वाविद्यासंवृतो जीवः संक्लेशनिकराकर इति स्वामिसूक्तौ, तथा ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जित इति विष्णु-पुराणे च। ततस्तासां प्रेरकस्तत्तत्क्रीड़ायां प्रवर्त्तक इति वल्लभशब्दे-नैकार्थमेव। स वो हि स्वामीति तस्यामेव श्रुतौ ताः प्रति दुर्वाससो वाक्यात्। यच्च तासां क्वचित् पूर्वजन्मनि साधकत्वमिव श्रूयते, तत्तु पूर्वेषामिव व्याख्येयम्। तास्तु नित्यसिद्धा एव। अत इदमित्थमेव व्याख्येयम्। ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः। व्यरोचता-धिकं तात पुरुषः शक्तिभिर्यथा ॥ १८६ ॥

यथा यथावत्, अतएवाधिकं व्यरोचत इत्युक्तमुपपद्यते, स्वशक्त्येक-प्रकाशत्वात् श्रीभगवतः। गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्त-वल्लभम्। गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥१८७॥

गोप्य एव श्रियः कान्तं मनोहरम् एकान्तवल्लभं रहोरमणम् ॥ १० ॥ ३२ ॥ श्रीशुकः ॥ १८६ ॥ १८७ ॥

आसां महत्त्वन्तु ह्लादिनीसारवृत्तिविशेषप्रेमरससारविशेषप्राधा-न्यात्। तदुक्तम्—आनन्दचिन्मयरसप्रतिभाविताभिरिति। आनन्द-

चिन्मयरसेन प्रेमरसविशेषेण प्रतिभाविताभिरित्यर्थः। अतएव तत्प्राचुर्य्यप्रकाशेन श्रीभगवतोऽपि तासु परमोल्लासप्रकाशो भवति, येन ताभीरमणेच्छा जायते। तत्रैवाह—भगवानपि ता रात्रीः शारदोत्फुल्लमल्लिकाः। वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥१८८॥

योगमायां दुर्घटसम्पादिकां स्वरूपशक्तिं तत्तल्लीलासौष्ठवघटमायोपाश्रित इति तस्मै तां प्रवर्त्तितेत्यर्थः ॥१०॥२९॥ श्रीशुकः ॥ १८८ ॥

अथ तासां नामानि श्रूयन्ते भविष्योत्तरे मल्लद्वादशीप्रसङ्गे श्रीकृष्णयुधिष्ठिरसंवादे—गोपीनामानि राजेन्द्र प्राधान्येन निबोध मे। गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका। राधानुराधा सोमाभा तारका दशमी तथेति। दशम्यपि तारकानाम्नेत्यर्थः। स्कान्दप्रह्लादसंहितायाम् द्वारकामाहात्म्ये माघावसरप्रस्तावे श्रीललितोवाचेत्यादिना। ललिता श्यामला धन्या विशाखा राधा शैब्या पद्मा भद्रेत्येतान्यष्टैव गृह्णीतानि। अथ वनिताशतकोटिभिरित्यागमप्रसिद्धेरन्यान्यपि लोकशास्त्रयोरनुगन्तव्यानि। अत्र शतकोटित्वान्यथानुपपत्त्यापि तन्महाशक्तित्वमेवावगम्यते। तदेवं परममधुरप्रेमवृत्तिमयीषु तास्वपि तत्सारांशोद्रेकमयी श्रीराधिका तस्यामेव प्रेमोत्कर्षपराकाष्ठाया दर्शितत्वात् प्रीतिसन्दर्भे दर्शयिष्यमाणत्वाच्च। यत्र च तत्प्रेमवैशिष्ट्यं तत्रैव, यस्यास्ति भक्तिर्भगवत्यकिञ्चनेत्यादिवत् सर्वा ऐश्वर्य्यादिरूपा अन्याः शक्तयो नात्याहृता अप्यनुगच्छन्तीति श्रीवृन्दावने श्रीराधिकायामेव स्वयं लक्ष्मीत्वम्। अतएव सतीष्वन्यास्वपि मुख्याभिप्रायेणैव तस्या एव वृन्दावनाधिपत्येन नामग्रहणम्। यथा पाद्मे कार्त्तिकमाहात्म्ये शौनकनारदसंवादे—वृन्दावनाधिपत्यञ्च दत्तं तस्यै प्रत्युष्यता। कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने इत्यनेन। अन्यत्र साधारणे देशे देव्येवाधिकारिणी श्रीवृन्दावनाभिवने तु श्रीराधिकैवेत्यर्थः। एवं स्कान्दे—वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे। रुक्मिणी द्वारवत्याञ्च राधा वृन्दावने वने।

इति। तथा मात्स्येऽपि। शक्तित्वमात्रसाधारण्येनैव लक्ष्मीसीता-रुक्मिणीराधानामपि देव्या सह गणनम्। वैशिष्ट्यन्तु लक्ष्मीवत् सीतादिष्वपि ज्ञेयम्। तस्मान्न देव्या सह लक्ष्म्यादीनामैक्यम्। श्रीरामतापनी-श्रीगोपालतापन्यादौ तासां स्वरूपभूतत्वेन कथनात्। श्रीराधिकायाश्च यामले पूर्वोदाहृतपद्यत्रयानन्तरं, भुजद्वययुतः कृष्णो न कदाचिच्चतुर्भुजः। गोप्यैकया युतस्तत्र परिक्रीड़ति सर्वदेति। अत्र वृन्दावनविषयकतत्सहितसर्वदाक्रीड़ित्वलिङ्गावगतेर्न परस्पराव्यभिचारेण स्वरूपशक्तित्वम्। सतीष्वप्यन्यासु एकया इत्यनेन तत्रापि परममुख्यात्वमभिहितम्। तथाच बृहद्गौतमीये श्रीबलदेवं प्रति श्रीकृष्णवाक्यम्—सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल। त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा। प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी। सात्त्विकं रूपमास्थाय पूर्णोऽहं ब्रह्म चित्परः। ब्रह्मणा प्रार्थितः सम्यक् सम्भवामि युगे युगे। तया सार्द्धं त्वया सार्द्धं नाशाय देवताद्रुहामित्यादि। सत्त्वं कार्य्यत्वं तत्त्वं कारणत्वं ततोऽपि परत्वञ्चेति यत्तत्त्वत्रयं तदहमित्यर्थः। अतएव श्रीराधाप्रसङ्गे तत्-पुरतोऽपि—सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा इति। ऋक्-परिशिष्टश्रुतिश्च तथैवाह—राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा। विभ्राजन्ते विभ्राजते,आ सर्वत इति श्रुतिपदार्थः। एतत् सर्वमभिप्रेत्य मूर्द्धण्यश्लोके तादृशोऽप्यर्थः सन्दधे। तत्र तयोर्महा-महैश्वर्य्यप्रतिपादकोऽर्थः पूर्ववत् स्वयमनुसन्धेयः। परममाधुरीप्रतिपादकोऽर्थस्तु यथा, जन्माद्यस्येति ॥ १८९ ॥

यतोऽन्वयादनुगच्छति सदा निजपरमानन्दशक्तिरूपायां तस्यां श्रीराधायामासक्तो भवतीत्यन्वयः श्रीकृष्णस्तस्माद् यस्मात्तथा इतरत इतरस्याश्च तस्य सदा द्वितीयायाः श्रीराधाया एव यतो यस्या आद्यस्यादिरसस्य जन्म प्रादुर्भावः, यावैवादिरसविद्यायाः परमनिधानमित्यर्थः। अतएव तयोरत्यद्भुतविलासमाधुरीधुरीणतामुद्दिशति, यः

अर्थेषु तत्तद्विलासकलापेषु अभिज्ञो विदग्धः या च स्वेन तथाविधेना-त्मना राजते विलासतीति स्वराट्। अतएव सर्वतोऽप्याश्चर्य्यरूपयोस्तयो-र्वर्णने मम तत्कृपैव सामग्रीत्याह, आदिकवये प्रथमं तल्लीलावर्णन-मारभमाणाय मह्यं श्रीवेदव्यासाय हृदा अन्तःकरणद्वारैव ब्रह्म निज-लीलाप्रतिपादकं शब्दब्रह्म यस्तेने आरम्भसमकालमेव युगपत् सर्वमिदं पुराणं मम हृदि प्रकाशितवान् इत्यर्थः। एतच्च प्रथमस्य सप्तम एव व्यक्तम्। यद् यस्याञ्च सूरयः शेषादयोऽपि मुह्यन्ति स्वरूपसौन्दर्य्यगुणा-दिभिः अत्यद्भुता केयमिति निर्वक्तुमारब्धा निश्चेतुं न शक्नुवन्ति। एवं-भूता सा यदि कृपां नाकरिष्यत् तदा लब्धमाधवताद्दशकृपस्यापि मम तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्यग्रोऽग्रतोऽवलाः। बध्वाः पदैः सुपृक्तानि विलोक्यार्त्ताः समब्रुवन्नित्यादिना तस्या लीलावर्णनलेशोऽपि साहस-सिद्धिरसौ नाभविष्यदेवेति भावः। तयोराश्चर्य्यरूपत्वमेव व्यनक्ति तेजो-वारिमृदामचैतन्यानामपि यथा येन प्रकारेण विनिमयः परस्परं स्वभावविपर्य्ययो भवति तथा यो विभ्राजत इति शेषः। वाक्यशेषञ्च भावाभिभूतत्वेन न वक्तुं शक्तवानिति गम्यते। तत्र तेजसश्चन्द्रादेस्तत्पद-नखकान्तिविस्फारतादिना वारिमृद्वन्निस्तेजस्त्वधर्म्मावाप्तिः। वारिणो नद्यादेश्च तत्संसर्गवंशीवाद्यादिना वह्न्यादितेजोवदुच्छूनताप्राप्तिः पाषाणादिमृदश्च स्तम्भप्राप्तिः। मृदश्च पाषाणादेस्तत्कान्तिकन्दली-कृरितत्वेन तेजोवदुज्ज्वलताप्राप्तिर्वंशीवाद्यादिना वारिवच्च द्रवता-प्राप्तिरिति। तदेतत् सर्वं तस्य लीलावर्णने प्रसिद्धमेव। यत्र यस्याञ्च विद्यमानायां त्रिधासर्गः श्रीभूलीलेतिशक्तित्रयोप्रादुर्भावो वा द्वारकामथुरावृन्दावनानीतिस्थानत्रयगतशक्तिवर्गत्रयप्रादुर्भावो वा वृन्दावन एव रसव्यवहारेण सुहृदुदासीनप्रतिपक्षनायिकारूपत्रिभेदानां सर्वासामपि व्रजदेवीनामेव प्रादुर्भावो वा मृषा मिथ्यैव। यस्याः सौन्द-र्य्यादिगुणसम्पदा तास्ताः कृष्णस्य न किञ्चिदेव प्रयोजनमर्हन्ती-त्यर्थः। तद्धीमहि इति यच्छब्दलब्धेन तच्छब्देनान्वयः। परम्

शक्तिमत्त्वे नातिशयितमहाभावरसेन वा परस्परमभिन्नतां गतयोरैक्ये-नैव विवक्षितं तदिति । अतएव सामान्यतया परामर्शान्नपुंसकत्वञ्च । कथम्भूतं स्वेन धाम्ना स्वप्रभावेण सदा निरस्तं स्वलीलाप्रतिबन्धकानां जरतीप्रभृतीनां प्रतिपक्षनायिकानाञ्च कुहकं माया येन तत् । तथा सत्यं तादृशत्वेन नित्यसिद्धम् । यद्वा परस्परं विलासादिभिरनवरतमा-नन्दसन्दोहदाने कृतसत्यमिव जातम् । तत्र निश्चलमित्यर्थः । अतएव परमन्यत्र कुत्राप्यदृष्टगुणलीलादिभिर्विश्वविस्मापकत्वात् सर्वतोऽप्युत्-कृष्टम् । अत्रैकोऽपि धर्मो भिन्नवाचकतया वाक्ययोर्निर्दिष्ट इत्युभयसा-दृश्यावगमात् प्रतिवस्तूपमानामालङ्कारोऽयम् । इयञ्च मुहुरुपमितमिति मालाप्रतिवस्तूपमा । तेन तैस्तैर्गुणैर्मिथो योग्यतया निबद्धत्वात् सम-नामापि । एतदलङ्कारेण च अहो परस्परं परस्मात् परमपि तन्मिथुनभूतं किमपि तत्त्वं मिथो गुणगणमाधुरीभिः समतामिव समवाप्त-मिति सकलजीवजीवातुतमरसपीयूषधाराधाराधरतासम्पदा कस्मै वा निजचरणकमलविलासं न रोचयतीति स्वतः सम्भवि वस्तु व्यज्यते । तदाहुः । प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । इयं मालयापि दृश्यत इति । एवं समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुन इति । तथा, वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः । कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट् । षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः । अर्थशक्त्युद्भवो व्यङ्गो याति द्वादशभेदतामिति । अतः सर्वतोऽपि सान्द्रानन्दचमत्कारकरश्रीकृष्णप्रकाशे श्रीवृन्दावनेऽपि परमाद्भुत-प्रकाशः श्रीराधया युगलितस्तु श्रीकृष्ण इति । तदुक्तमादिपुराणे वेदान्तिनोऽपि इति पद्यानन्तरम्—अहमेव परं रूपं नान्यो जानाति कश्चन । जानाति राधिका पार्थ अंशानर्च्चन्ति देवता इति । तयोर्नित्यविलासस्त्वित्थं, यथा वर्णितमस्मदुपजीव्यचरणाम्बुजैः, वाचा सूचितशर्वरीरतिकलाप्रागल्भ्यया राधिकां व्रीड़ाकुञ्चितलोचनां विर-

चयन्नग्रे सखीनामसौ। तद्वच्चोरुहचित्रकेलिमकरीपाण्डित्यपारं गतः कैशोरं सफलीकरोति कलयन् कुञ्जे विहारं हरिरिति। तदेवं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यातः। तस्मिन्नपि सम्बन्धे श्रीराधामात्रवरूपेणैव प्रादुर्भावस्तस्य सम्बन्धिनः परमः प्रकर्षः। तदुक्तं श्रुत्या राधया माधवो देव इति। एतदर्थमेव व्यतानिषमिमाः सर्वा अपि परिपाटीरीति पूर्णः सम्बन्धः। गौरश्यामरुचोज्ज्वलाभिरमलैरक्ष्णो-र्विलासोत्सवैर्नृत्यन्तीभिरशेषमादनकलावैदग्ध्यदिग्धात्मभिः। अन्योन्यप्रियतासुधापरिमलस्तोमोन्मदाभिः सदा राधामाधवमाधुरीभिरभितश्चित्तं ममाक्रम्यताम् ॥ १ ॥ ४ ॥ १८९ ॥

इति कलियुगपावनस्वभजनविभजनप्रयोजनावतार-
श्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्व-
वैष्णवराजसभासभाजनभाजनश्रीरूप-
सनातनानुशासनभारतीगर्भे
श्रीभागवतसन्दर्भे श्रीकृष्ण-
सन्दर्भो नाम चतुर्थः
सन्दर्भः।

श्रीभागवतसन्दर्भे सर्वसन्दर्भगर्भगे।
श्रीकृष्णसन्दर्भनामा सन्दर्भोऽभूच्चतुर्थकः॥

चतुर्थसन्दर्भः समाप्तः।

—(०)—



षट्सन्दर्भनामक-

# श्रीभागवतसन्दर्भे

पञ्चमः

## भक्तिसन्दर्भः ।

—०—

तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ ।
दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥
तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् ।
पर्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥

अत्र पूर्वं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यातः । तत्र पूर्णसनातन-परमानन्दलक्षणपरतत्त्वरूपं सम्बन्धि च ब्रह्म परमात्मा भगवानिति त्रिधाविर्भावतया शब्दितमिति निरूपितम् । तत्र च भगवत्त्वेनैवाविर्भावस्य परमोत्कर्षः प्रतिपादितः । प्रसङ्गेन विष्णवाद्याश्चतुःसनाद्याश्च तदवतारा दर्शिताः । स च भगवान् स्वयं श्रीकृष्ण एवेति निर्द्धारितम् । परमात्मवैभवगनने च तत्तटस्थशक्तिरूपाणां चिदेकरसानामपि अनादिपरतत्त्वज्ञानसंसर्गाभावमयतद्वैमुख्यलब्धच्छिद्रया तन्माययावृतस्वरूपज्ञानानां तयैव सत्त्वरजस्तमोमये जड़े प्रधाने रचितात्मभावानां जीवानां संसारदुःखञ्च ज्ञापितम् । यथोक्तमेकादशे श्रीभगवता—आत्मा-परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदात्मनिष्ठः । व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकादिति । ततस्तदर्थं परमकारुणिकं शास्त्रमुपदिशति । तत्र च ते जीवा ये केचित् जन्मान्तरावृत्ततदर्थानुभवसंस्कारवन्तो ये च तदैव वा लब्धमहत्कृपातिशय-दृष्टिप्रभृतयः । तेषां तादृशपरतत्त्वलक्षणवस्तूपदेशश्रवणारम्भमात्रेणैव

तत्कालमेव युगपदेव तत्साम्मुख्यं तदनुभवोऽपि जायते। यथोक्तम्—किम्वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणादिति। ततस्तेषां नोपदेशान्तरापेक्षा। याद‍ृच्छिकमुपदेशान्तरश्रवणं तु तत्तल्लीलाश्रवणवत्तदीयरसस्यैवोद्दीपकम्। यथा श्रीप्रह्लादादीनाम्। अथान्येषां तत्श्रवणमात्रेण ताद‍ृशत्वं वीजायमानमपि कालादिवैगुण्येन तदिव दोषेण प्रतिहतं तिष्ठति। नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधुतीव्रम्। कामातुरं हर्षशोकभयैषणार्त्तं तस्मिन् कथं तव गतिं विमृशामि दीनः॥ इति दीनम्मन्यश्रीमत्प्रह्लादवचनानुसारेणान्येषामेव तत्प्राप्तेः। एवमेवोक्तं ब्रह्मवैवर्त्ते—यावत् पापैस्तु मलिनं हृदयं तावदेव हि। न शास्त्रे सत्यबुद्धिः स्यात् सद्बुद्धिः सद्गुरौ तथा। अनेकजन्मजनितपुण्यराशिफलं महत्। सत्सङ्गशास्त्रश्रवणादेव प्रेमादि जायत इति। ततो मुख्येन तात्पर्य्येण परतत्त्वे पर्य्यवसितेऽपि तेषां परतत्त्वाद्युपदेशस्य किमभिधेयं प्रयोजनञ्चेत्यपेक्षायां तदवान्तरतात्पर्य्येण तद्द्वयमुपदेष्टव्यम्। तत्राभिधेयं तद्वैमुख्यविरोधित्वात्तत्साम्मुख्यमेव। तच्च तदुपासनलक्षणं, यत एव तज्ज्ञानमाविर्भवति। प्रयोजनञ्च तदनुभवः। स चान्तर्वहिःसाक्षात्कारलक्षणः, यत एव स्वयं कृत्स्नदुःखनिवृत्तिर्भवति। तदेतद्द्वयं यद्यपि पूर्वत्र सिद्धोपदेश एव अभिप्रेतमस्ति, तथा, तव गृहे निधिरस्तीति श्रुत्वा कश्चिद्दरिद्रस्तदर्थं प्रयतते लभते च तमिति, तद्वत्, तथापि तच्छैथिल्यनिरासाय पुनस्तदुपदेशः। तदेवं तान् प्रत्यनादिसिद्धतज्ज्ञानसंसर्गाभावमयतद्वैमुख्यादिकं दुःखहेतुं वदद्व्याधिनिदानवैपरीत्यमयचिकित्सानिभं तत्साम्मुख्यादिकमुपदिशति—भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्य्ययोऽस्मृतिः। तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा॥ १॥

टीका च—यतो भयं तन्मायया भवेत्ततो बुद्धिमान् तमेव भजेदुपासीत। ननु भयं द्वितीयाभिनिवेशतो भवति, स च देहाद्यहङ्कारत

